


# मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु, (आ. प्र.) भारतम्

संपुटः ८ | 15 OCTOBER 1970 | क्रमांकः १०



साधारण आश्वयुजांकः ]    १८९२ शकः    [ मूल्यम् ४० पैसाः

# विषयसूची



—★—



# जयतु भारतमेदिनी



जयतु मंगळरंगशोभितचतुरभारतमेदिनी,
जयतु तुंगोच्चलितभंगोज्वलितदिव्यतरंगिणी ॥

विजयनगरीपाटलीपुरविजयकेतननिचितबहुमणि-
भवनगणपरिकलितकांचनसालतेजोवाहिनी ॥ ॥ ज ॥

शंकरार्ययतीशपूर्णप्रज्ञचैतन्यादिवैदिक-
तत्त्ववित्सदयप्रबोधितनित्यसत्यमनस्विनी ॥ ॥ ज ॥

कृष्णवेणीजाह्नवीयमुनासरित्कावेरिका-
तुङ्गभद्राद्यतिपवित्रधुनीविशुद्धपयस्विनी ॥ ॥ ज ॥

काशिकाकांचीप्रयागप्रथितबृन्दाबदरिकावन-
महितपुण्यक्षेत्रभूषितसुकृतरूपविनोदिनी ॥ ॥ ज ॥



# सम्पादकीयम्

## किमिदं प्राजातन्त्राम् ?

प्रजानामभिप्रायानुगुणं राज्यं प्रजातन्त्रमिति व्यवह्रियते। प्रजाश्च असंख्याकाः, तेषामभिप्रायाश्च बहुविधाः परस्परविरुद्धा भवन्ति प्रायशः। किं बहुना एकस्यैवैकदा स्फुरन् अभिप्रायः क्षणान्तरे असाधुत्वेन प्रतिभाति एवं स्थिते प्रजाभिप्रायस्य कदाप्येकत्वाननुभवात् प्रजातन्त्रं सुस्थिरं न भवति। पश्यत, बहवः पक्षाः, पक्षेषु च कक्षाः, तासु च विक्षोभा इति प्रतिपद मनुभूयते उपद्रवशतम् । प्रजासम्मतिसंपादनाय असाध्यानि अनूह्यान्यपि कार्याणि प्रतिज्ञायन्ते। अत्रसिते च कार्ये, सिद्धे प्रयोजने स्वीये "आवृत्तः कुक्कुटायते" इतिव तत्सम्मतिदातॄणां पूर्वतोपि दुर्गतिरेव भवति। नायकस्य मुखमपि न लक्ष्यये। यथाकथंचिद्दृष्टोपि स न भाषते, भाषमाणोपि स्ववचनं परवचनं वा न स्मरति समये। सततं सः आत्मगौरवाय स्वात्मार्थसंपादनायैव यतते।

केचिच्च मंत्रित्वसंपादनोत्सुकाः तत्संपादनाय आत्मसम्मन्तॄन् आत्मपक्षमपि वा प्रतिबन्धत्वेन भावयित्वा तेभ्यस्तिलांजलिं ददति। प्रतिपक्षमपि आदरेण प्रविशन्ति। वराकाः सन्धुक्षितपक्षावेशाः सम्मन्तारश्च यथापूर्वं कलहायेरन्।

किमिदं शासनम्! यत् यश्च यया प्रतिज्ञया प्रजा वञ्चयित्वा विजयं

संपाद्य सभ्योऽभवत्, स्वप्रतिज्ञां च अतिचक्राम, तं नहुषवत्पातयितुम् पदात् न शक्नोति ? सभ्यतामारोपयितुं यास्सम्मतयः समर्थाः किं न तास्ततोवतारणाय स्वप्रतिनिधेः ? अविनीतौ परिज्ञातायां ताभिरेव प्रजाभिः आत्मासम्मत्या स पातनीयः। यद्येवं स्यात् अभ्यर्थिनश्च वंचनावचनानि न ब्रूयुः, प्रतिज्ञातं च न विस्मरेयुः, प्रजाहिते च प्रवर्तेरन्।

अद्यतनमिदं किं प्रजातन्त्रम् ? यद्धनेन सम्मतयः क्रीयन्ते, पक्षाश्चावधूयन्ते, क्षणक्षणं च वर्णः परिणम्यते वृद्धकृकलासैरिव। आत्मायत्ताश्च (इंडिपेन्डेन्ट्) केचिदुत्तीर्णास्सभ्यत्वेन। तेषां च व्यथा अवाच्या यतः बहुपक्षीयास्तान् स्वस्वपक्षमावेशयितुं बाधन्ते। तेषां गतिरुभयतः पाशा रज्जुर्भवति। यद्यपि निर्णीतपक्षस्थानां सभ्यानां एतादृशी दुर्दशा नास्ति तथापि तेपि अकृष्यन्ते अन्यपक्षिभिः कालपाशसमैराशापाशैः। भारतीयसभ्यानां पक्षपरिवर्तनकलाकुशलता अतिभूमिं गता परिहस्यते प्रश्नैश्च। एतेन पक्षपरिवर्तनरोगेण सबलान्यपि प्रभुत्वानि शिथिलानि अधःपतन्ति, दुर्बलानि च तानि शिलींध्रवत् उद्भवन्ति क्षणाय।

बहूनां प्रधानपक्षाणामयं महाव्याधि स्संलग्नः यत् प्रजाहितकरस्यापि न्यायवर्तिनोपि स्वेतरपक्षप्रभुत्वस्य पातने एव निरन्तरं परिश्रम इति। स्थिरप्रभुत्वभञ्जने आत्मनः प्रभुत्वनिर्वहणसामर्थ्यमप्यस्ति न वेति ते नालोचयन्ति। केवलं परभञ्जनमेव ते कांक्षन्ते। तदर्थं ते व्यालं गले अपि धरेयुः, व्याघ्रमुखेपि स्वकरं न्यसेयुः, हालाहलं वा गिलेयुः। एवंविधैः नायकैः भारतमिदानीं अस्तव्यस्तं भवति आसेतुहिमाचलम्। आन्ततस्ते प्रजा अपि भ्रामयन्ति परस्परविरुद्धवचोभिः चेष्टाभिः प्रजास्संकटे पातयन्ति च।

जातिविभेदं निरासयन्तस्त एव उद्योगप्रदाने विद्याप्रदाने आर्थिकसहायकल्पने च जातिमेव पुरस्कुर्वन्ति सुदृढम्। प्रतिभाविशेषमाकांक्ष-

माणास्ते तं बहुशः उपेक्षन्ते । मतं प्रतारयन्तस्ते तदेवान्तरुद्योतयन्ति । आहारसौलभ्यमुद्घोषयन्तस्ते मूल्यानि प्रवर्धयन्ति । अधिकोत्पत्तिमुत्प्रेक्ष-माणा एव ते कार्मिकबन्धान् प्रोन्नाहयन्ति क्लेशयन्ति च पारिश्रामिकान् । शासनविधेयता मादिशन्तो जनानां ते स्वयमेव तदुल्लंघयन्ति । निरुद्योग-समस्यां अवश्यनिवार्यां प्रकाशयन्तस्ते उद्योगिनोऽपसारयन्ति । मितव्यय-मभिबोधयन्तस्ते अमितव्ययं कुर्वन्ति । धनिनो दूषयन्तस्ते स्वधनं गोपायन्ते । परिमितक्षेत्रवत्ता मुपपादयन्तस्ते अपरिमितं स्वक्षेत्रं स्वीयेषु रक्षन्ति । राजभृतीराहरन्तस्ते स्वयं राजानो भवन्ति ।

अधनानां सहायमिषेण धनिनामेव ते साह्यमाचरन्ति । निर्णीत-जातय इति पश्चाद्भूतजातय इति च जातिपुरस्कारेण सौकर्यप्रापणात् धनिनः मूढाश्च तल्लब्ध्वा देशस्य भारमेव संपादयन्ति । प्रतिभामाध्यमेन दारिद्र्यमाध्यमेन च तदर्पणे प्रतिभाशालिनां प्रतिभा समुद्दीप्येत, तया च ते स्वदेशस्य सर्वविधसंपत्संपादने प्रभवेयुश्च ।

विचार्यमाणे प्रायशो ब्राह्मणाः निर्धनाः अपितु प्रतिभाशालिनो भवन्ति । यद्यपि पूर्वं पांडित्यबलेन राजाश्रयादिना प्राप्तक्षेत्रादय आसन् तथापीदानीं तत्सर्वं व्ययित्वा निर्धना एव समभवन् ते । अंगुलिमेयानां तदितरेषां विपर्ययोन्यः । तेषां दूरीकरणे कर्षकाक्रान्तक्षेत्रकाः विद्यार्जनार्थं बिक्रीतक्षेत्रकाः अतिथ्यभ्यागतपूजनव्ययितधनका इतरे वा बहुलं निर्धना एवोपलभ्यन्ते शतशः । तेष्वपि बहुलाः प्रतिभाहीना अलसा असमर्थाः अनुचितवर्तना वर्तन्त एव तेषां च दूरीकरणमवश्यं कर्तव्यमेव । अपितु प्रतिभावतां सहायप्रापणे तत्सहायस्य वा स्वीकारे ब्राह्मणत्वं निरोधहेतुर्न भवेदित्येव ममाशयः ।

जातिर्यातु रसातलं – प्रतिभाशाली योवा कोवास्तु स दारिद्र्य-कारणेन अधःपतितो न भवेत् तस्य च प्रतिभा सर्वकारकार्येष्वनुपयुक्ता न भवेदित्येव निवेदयामि ॥

---

## संस्कृतभाषया प्रमाणस्वीकारः

———o———

महीशूरशासनमंडल्यै नूतननिर्वाचितेषु सभ्येषु श्री यं. आनन्दरावः (आत्मायत्तः) श्री जि. उल्लालः (जनसंघीयः) च इति द्वौ सेप्टम्बर २४ दिने तात्कालिकाधिपीठकस्य श्रीमतः के. सुब्बरावस्य समक्षं संस्कृत-भाषया प्रमाणस्वीकारमकुर्वन्निति प्रमोदावहेयं वार्ता ।

## श्रीगौरांग

इदं च पत्रम् गुण्टूरस्य गौडीयमठात् श्रीमाधवानन्दब्रह्मचारिणा सेवालंसारेण आन्ध्रभाषायां प्रतिमासं प्रकाश्यते । प्रथमसंपुटस्य विशिष्ट-संचिका अधिगता, सा च सुमनोहरा सुन्दरप्रतिबिम्बा गौरांगमहोदयस्य तच्छिष्याणां षण्णां गोस्वामिनां च संक्षिप्तेनेतिवृत्तेन भूषिता गौरांगभक्ति-सिद्धांतोद्बोधिनी अतीव भक्तानां मनांसि आवर्जयति ।

अस्य वार्षिकम् रु. 5-00



संस्कृतदिनपत्रिका

शुभोयं कालः समुपस्थितः संस्कृतस्य संस्कृत्याः भारतदेशस्यैव वा यत्

# सुधर्मा

नाम्नी एका दिनपत्रिका महीशूरपुरे प्रकाश्यमाना आनन्दयति भारतम् । सा शोभनाकारा आकारे अल्पापि प्रकारे महती नेत्रपर्व आदधाति । संस्कृते सामयिकानामेव पत्राणां निर्वाहे क्लेशविशेषाधायिनि अस्मिन् दुष्काले दिनपत्रिकायाः निर्वहणदीक्षा श्रीमतां के. एन्. वरदराजय्यंगार्यस्य आश्चर्यकारिणी प्रतिभाति । प्रजाः प्रभुता च यथाशक्ति सहकृत्य एतां पत्रिकां चिरजीविनीं कुर्युः । भगवान् सुधर्मा मध्यपीठस्थः श्रीकृष्णः रक्षतु सर्वतः सर्वप्रकारम् ।

अस्याः प्राप्तिस्थानम् –

Editor, "SUDHARMA"
561, Ramachandra Agraharm,
Mysore – 4.

प्रेषणव्ययसहितम् वार्षिकम् रु. 24–00, षाण्मासिकम् – रु. 12–00
त्रैमासिकम् रु. 6–00, मासिकम् – रु. 2-00



# विजाति नागरकते प्रजामति भ्रमणप्रीते!



स्नानं अभञ्जयः सन्ध्यां व्यघटयः
ध्यानं व्यद्रावयः पानं प्रासञ्जयः,
दैवं प्राणाशयः भावं प्राचालयः
लीलां व्यस्तारयो हालां प्रास्तारयः ॥ ॥ वि ॥

पातिव्रत्यमक्षिपः पवित्रतां प्राक्षिपः
लज्जाशीलं प्रामञ्जयः सज्जातीः समपमार्जयः,
जिह्वाचापलं प्राचोदयो गुह्यचापलं प्रारोचयः,
वेषभाषाः प्रावर्धयः मृषावादान् अपोषयः ॥ ॥ वि ॥

शिखाः पुरुषाणा मकर्तयः स्त्रीणां च चूर्णालकाः
अखण्डयोऽबलानां गर्भपेशीः पुंसां च वीर्यनालीः,
प्राकाशयः तरुणीनां अंगं तरुणानां च शृंगम्
अचोरयो वटूनां निष्ठां कन्यानां च निग्रहकाष्ठाम् ॥ ॥ वि ॥

अयोजयः पुंस्वेव लज्जां स्त्रीष्वेव धार्ष्ट्यम्
आसञ्जयो मुखेषु चूर्णं प्रमुखेषु चर्णम्,
आवाहयोऽखिलेषु गर्वं अविनीतिं सर्वाम्
अकल्पयः क्षणमात्रे विवाहं क्षणान्तरे च विभागम् । ॥ वि ॥

सर्वान् सोपानत्कान् सर्वदा सोपानत्कान्
सर्वान् सधूमवर्तिकान् सर्वदा सधूमवर्तिकान्,
सर्वान् तिष्ठन्मूत्रान् सर्वदा तिष्ठन्मूत्रान्
सर्वान् साटोपान् साधुकोपान् अकरोः नीतिदूरे ! भीकरे ! ॥ वि ॥

# संस्कृतमहोत्सव निर्वर्तन प्रतिपादनम्

सेप्टम्बरमासाष्टमतिथौ केन्द्रीयसंस्कृतपरिषदः कार्यवर्ग स्समाविष्टः आसेतुहिमाचलं भारते संस्कृतमहोत्सवस्य निर्वर्तनाय भारतसर्वकारं अचोदयत्। स च महोत्सवः कार्तिकपूर्णिमा मारभ्य सप्तसु दिनेषु सप्ताहरूषेण भूयादित्यपि स कार्यवर्गः सर्वकाराय प्रत्यपादयत्।

कार्यवर्गाध्यक्षः भक्तदर्शनः (केन्द्रराष्ट्र विद्यामन्त्री) एतत्समावेश-संदर्भे एवमवोचत् –

"अस्मिन् वर्षे अक्टोबर नवम्बरमासयो स्समावेश्यमाने युनेस्को-समावेशे अन्तर्जातीय संस्कृतसमावेशोपि भारते एव निर्वर्त्येतेति भारत-सर्वकारः स्वसंकल्पं प्रतिपादयिष्यति" इति।

चतुर्थप्रणालिकायां संस्कृतप्रगत्यै भारतसर्वकारेण कुत्रचिद्विषयेषु आर्थिकानुदानमपि क्रियेतेति सोऽवदत्।

तद्विवरणमिदम् –

(१) स्वच्छन्दसंस्कृतसेवा संस्थानां कृते।
(२) नूतन संस्कृतग्रन्थरचनार्थं।
(३) प्राचीन संस्कृतग्रन्थपरिशोधनवेतनार्थम्।
(४) चर्चासंस्थानां, महोत्सवानां, वक्तृत्वस्पर्धानां च निर्वहणाय।
(५) संस्कृतपण्डितानां सहाय्याय।
(६) संस्कृतपाठशालानां प्रवर्धनाय च इति।

# साम्यवादो हि मूर्खता

ले० वैद्यः रामस्वरूपशास्त्री, संपादकः, बालसंस्कृतम्, बम्बई ६.



इदानीं साम्यवादस्य झञ्झावातः प्रवर्तते समुन्मूलयन् समाजम्। साम्यवादस्य सिद्धान्तो नाऽस्ति कोऽपि नवीनः, वेदेष्वपि आगमेष्वपि च समानतायाः कृते प्रार्थनाः सन्ति।

संगच्छध्वं संवदध्वं स वो मनांसि जानताम्।
देवा भागं यथा पूर्वे संजानाना उपासते।
समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम्।
समानं मन्त्रमभिमन्त्रये वः समानेन वो हविषा जुहोमि॥
समानी व आकूतिः समाना हृदयानि वः।
समानमस्तु वो मनो यथा वः सुसमाहतिः॥
सहृदयं सौमनस्यमविद्वेषं कृणोमि वः।
अन्योऽन्यमभिहर्यत वत्सं जातमिव अघ्न्या॥
समानी प्रपा सह वोऽन्नभागः समाने योक्त्रे सह वो युनज्मि।
समञ्चो देवं सपर्यतारा नाभिमिवाभितः॥
सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु।
सर्वः सर्वमवाप्नोतु सर्वः सर्वत्र नन्दतु॥
सर्वः समानो भवतु, सर्वः समानो भवतु, सर्वः समानो भवतु॥

इतीत्थं वेदा समानतां प्रार्थयन्ति। न ते बलादाहर्तुं वाञ्छन्ति ताम्। न क्वापि बलेन समानता जायते। न तूद्दण्डतया भवति समानता। सा

विनयेन लभ्यते। विनीताश्छात्राः समाने वर्गे समानायामेवासन्दिन्यां स्थिताः समानादेव गुरोः विद्यां पठन्ति। तेषु कदाचित् कश्चिदसमानो वक्रः खलश्चपलो वा जायते, तमध्यापकः सपद्येव वर्गाद् बहिष्करोति। समानत्वं विनयेन लभ्यम्, वर्तते च तेन लाभः। समानतायां सुखं शान्तिः शक्तिः जयश्च वर्तन्ते। समानता संघं निर्माति। संघशक्तिश्च काचिदतिमहती शक्तिः, यया वांछितानि सिद्ध्यन्ति। समानता यथा महार्घा तथैव सा सुदुर्लभाऽपि वर्तते जगति।

न हि साधारणो जनः समानतां व्यवहर्तुं प्रभवति। उदार-चरितानां महतामेव व्यवहाराः समानाः संभवन्ति, न जातु सामान्यानां जनानाम्।

अय निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानां तु वसुधैव कुटुम्बकम्॥

महतो महीयान् भगवान् परमात्मा सर्वेषु भूतेषु समानरूपेण हृदिस्थो वर्तते। स एव समानं व्यवहर्तुं शक्नोति। "समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः" इति गीतोक्तिः। भगवान् व्यासोऽपि निगमागममन्तव्यमाह भगवतः श्रीकृष्णस्य मुखेन –

विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः॥

तथापि न साकल्येन समानतां पश्यामो वयम्। लोकेषु प्रकृतिः सर्वमसमानं निर्माति। तारतम्यं भेदश्च वर्तते बहुल समानायामपि विधातृसृष्टौ। जनस्य समानयोः नेत्रयोः वामदक्षिणयोः हस्तयोः पादयो-

अपि तरतमकृतो भेदः भवत्येव। एकदेशीयः, एकजातीयः, एकवर्णोऽपि न कश्चिज्जनः साकल्येन समानो भवति। समानाभ्यां मातापितृभ्यां लब्धजन्मानो भ्रातरो न जातु साकल्येन समानाः सन्ति। कश्चित् स्थूलः कश्चित् कृशः कश्चित् दीर्घः कश्चित् ह्रस्वः कश्चित् गौरः कश्चित् कृष्णः इति विविधो जनो दृष्टिपथमायाति लोके। पुरुषेषु स्त्रीषु बालेषु वृद्धेषु च समानप्राणेष्वपि ब्राह्मणक्षत्रियवैश्यशूद्रेषु वर्तते स्वभावस्य वयसः शरीरस्य मुखस्य च भिन्नत्वम्। भिन्नता नाम व्यक्तेः परिचयः। न तां विना चलति प्रकृतेः कार्यं। भिन्नतां विना 'अमुकोऽयम्' इति जनेषु व्यवहारोऽपि न संभवति। भिन्नता हि स्थिरा शैली जगताम्। लोकेषु कश्चित् विद्वान् अन्यश्च मूर्खः, कश्चित् रोगी अन्यो भोगी, एको दरिद्रः अन्यश्च धनवान्। काचित् स्त्री गुणवती काचित् गुणरहिता। एका सा रूपवती अन्या च कुरूपा। जनश्च कश्चित् तुन्दिलः अन्यश्च व्यायामपुष्टविभक्तघनगात्रवान्, कश्चित् सरलः अन्यश्च वक्रः क्रूरस्वभावश्चेति सुदूरं भेदवान् वर्तते लोकेषु। प्रकृतिरेव वर्तते सुतरां भेदकरी। नैकजातीया वृक्षा अपि समानाकृतयो भवन्ति। जातौ जातौ व्यक्तौ व्यक्तौ च सन्ति भेदाः। नद्यो नदाः पर्वता भूमयश्चापि न समानाः सन्ति। वनानि क्षेत्राणि गृहाणि चापि सन्ति जनानामसमानानि। मानुषाणां बुद्धयः आचारा विचारा व्यवहाराश्च विभिद्यन्ते। तुण्डे तुण्डे मतिर्भिन्ना। भिन्नमतिर्हि लोकः। श्रुतयो विभिन्नाः स्मृतयोऽपि भिन्ना नैको मुनिर्यस्य मतं न भिन्नम्। हस्ते पञ्चांगुल्योपि समाना न सन्ति। जगतामीश्वरोऽपि विभिन्नातामेव वरयति "नामरूपविभेदेन जगत्क्रीडति यो यतः" इति श्रुतेः। भेदः खलु नीतिः।

साम्यं त्वकर्मण्यानां जनानां प्रलापः। भवतु नामावसरप्रतीक्षिणां राजद्रोहिणां तेन क्षणिको लाभः। नैव स्थास्यति तद्राजनीतौ। अनधिकारचेष्टा नाम व्यर्थं साम्यवादस्य चर्चा। ईश्वरः खल्वीश्वरः एव। तस्मै साम्यं न रोचते। स भेदमुत्पाद्य शास्ति लोकान्। ईश्वरजीवयोर्यथा समानता सुदूरेऽस्ति तथैव धनिनिर्धनयोः समानता न संभवति। साम्यं खलु धूर्तानां छलम्, न लोकहितं तदिति विद्वांसो वदन्ति। इदमत्र युज्यते वक्तुम् –

धनिनो धनिनः सन्तु, श्रमी चास्तां कृतश्रमः।
ईश्वरोऽपीश्वरश्चास्तां, साम्यवादो हि मूर्खता॥

---

## कोविदपरीक्षां

### उत्तीर्य

### संस्कृतपंडितपदवीं निर्वहत !

एतत्सभीया कोविदपरीक्षा आंध्रसर्वकारेण उपाध्यायत्वयोग्या अंगीकृता। अतः तत्र उत्तीर्य पंडिता भवत।

इति

ति. कं. तिरुवेङ्कटाचार्यः

प्रधानमन्त्री.

# सुलभपाठमाला ४८

## वृक्षाः ११

## सीताफलः

---

सीताफलनामा क्षुद्रो वृक्षः। अयं च उपदशपदोन्नतो वर्धते। अस्य शाखाः दुर्बलाः भवन्ति, पत्राणि च औदुम्बरपत्रवत् सान्द्रहरितानि च भवन्ति। अयं अरण्येषु उद्यानानां वृतिषु च वर्धते। अस्य फलानि आम्रफलपरिमाणानि उपरि सर्वतः ग्रन्थिमन्ति श्वेतहरितानि भवन्ति। फलानां पक्वदशायां ग्रन्थयश्च दूरदूरं अपसरेयुः, यन्मध्यात् फलसारपिण्डः संदृश्येत। तदा तदास्वाद्यं भवति। फलस्य उन्मोचने अन्तःसारपिण्डः धवलः समीक्ष्येत। स च एकैकग्रन्थेरनुबद्धानां पिण्डखण्डानां समवायरूपः अनुभूयेत। एकैकस्य पिण्डखण्डस्य चर्वणे अन्तः दीर्घस्निग्धं नीलं बीजं अवशिष्येत। स च सपोटाबीजवद्बहिः निष्ठीव्यते। एतत्फलानि प्रायशः वर्षर्तौ उपलभ्यन्ते। यद्यप्येतानि मधुरस्वादूनि तथापि एतद्भक्षणेन शीतज्वरावेशो भवेदिति केषांचिद्भयं भवति।

एतत्तुल्यमेव अन्यत् रामफलमिति वर्तते। अस्य वृक्षोपि सीताफलवृक्षसदृश एव भवति। फलमपि प्रायशस्तत्सदृशमेव। तथापि वर्णे अल्पः व्यत्यासो भवति ग्रन्थिषु च अस्य औन्नत्यहीनता स्निग्धता च अनुभूयते। सीताफलवत् रामफलानि न अविरलानि भवन्ति।

वदन्ति च पितामह्यः दन्तकथाः यत् अरण्यवाससमये सीतारामयोः प्रायशः एतान्येव फलानि आहारः आसन्, तत एतेषा मेतन्नामेति।

अस्य फलस्य शीतकालप्राप्यत्वात् शीतज्वरप्रापकत्वाच्च शीतफलमिति प्रथमं नामनि सिद्धे, उच्चारणदोषेण सीताफलमिति आसीत् तत्। तत्सदृशस्य अन्यस्य फलस्य सीतासहचरस्य नामापि सन्निवेशितमित्यपि वक्तुं शक्यते।

बालकथा (कथनम्)

# बालकप्रियः चाचा नेहरू पितृव्यः

रचयिता – ल. म. चक्रदेवः, श्रीवत्स बालमन्दिरम्, बम्बई 4

---

मम प्रियवयस्याः,

आगामि नोव्हेम्बर मासस्य एव, चतुर्दश दिनांके चाचा नेहरू-पितृव्यस्य-जन्मदिन-उत्सवः। अतः तस्य विषये एव, अहं युष्मभ्यं एकां कथां श्रावयामि, सावधानं श्रुणुत।

यथा वयं बालाः मोदकप्रियाः, तथा चाचा-नेहरू-पितृव्यः बालकप्रियः आसीत्। बालबालिकानां मध्ये सः अतीव आनन्दितो भवति स्म। तेषां मध्ये सः बालवत् खेलति स्म, बालवत् हसति स्म, बालवत् नृत्यति स्म, बालवत् मर्कट-चेष्टाः अपि अकरोत्।

एकदा किं अभूत, बालदिनसमारोहे सः अध्यक्षत्वेन आहूतः आसीत्। तदा, एकेन बालकेन, उच्चैः रोदितुम् आरब्धम्। तं शान्तं कर्तुं सर्वेऽपि उपायाः निष्फलाः। तदा, चाचा-नेहरू पितृव्येण किं कृतम्, सः प्रथमं भूमितले उपविष्टः, पश्चात् जान्वोः हस्तयोः आधारेण अश्ववद् उदतिष्ठत्। समारम्भस्य शोभार्थं स्थापिताभ्यः लताभ्यः एकस्याः लतायाः एकं खण्डं पातितम्। तं रुदन्तं बालकं स्वपृष्ठे संस्थापितवान्। तत् लताखण्डस्य एकं आग्रं बालकस्य हस्ते दत्तम्। अन्यद् अग्रं स्वमुखे खलीनवत् धृतम्। अग्रे, स्वयमेव "हैक् हैक् घोटक" "हैक् हैक् घोटक" इति उद्घोषणं कृत्वा, वलितुं आरब्धम्। अनेन आनन्दितो भूत्वा तेन बालकेन अपि अनुकरण प्रिय - बालस्वभावात्,

"हैक् हैक् घोटक" इति वक्तुं आरब्धम् । तदा नेहरू अश्वेन मन्दं मन्दं धावितुं आरब्धम् । अनया रीत्या तेन बालकेन अश्वारोहण सुखं अनुभूतम् । उच्चैः हसितुमपि आरब्धम् । तद्दृष्ट्वा सर्वेऽपि सम्मिलिताः बालकाः प्रमुदिताः । तैः सानन्दं तालिकावादनं कृतम् । अन्ते नेहरू पितृव्येण तं बालकं अवतार्य, स्वीय अश्वरूपं परित्यज्य, तं स्वहस्तयोः उद्धार्य, तस्य कपोलयोः, कपालस्य च चुम्बनं कृतम् ।

एवं आसीत् बालकप्रियः, अस्माकं चाचा नेहरू पितृव्यः । सर्वे यूयं वदत –

जयतु नेहरू पितृव्यः ! जयतु नेहरू पितृव्यः ! जयतु नेहरू पितृव्यः !

## मुक्तकानि

संकलयिता — विद्वान् माचिराजु शिवरामराजः

**प्रहसनम् —**

भस्यान्घोरगफूत्कृतिस्फुटभवत्फालस्थवैश्वानर-
ज्वालास्विन्नसुधांशुमण्डलगलत्पीयूषधारास्रवैः ।
सञ्जीवद्गजचर्मगर्जितभयभ्राम्यद्वृषाकर्षण-
व्यासक्तः सहसाऽद्रिजापहसितो नग्नो हरः पातु वः ॥

**प्रबोधनम् —**

जिह्वे ! मुख्यरसज्ञतां त्वयि गतां ज्ञात्वा समन्तात् स्थिताः
आसन् श्रीरघुनाथसद्गुणकथालाभार्थमेते द्विजाः ।
तद्वार्ताऽपि न हि त्वयीति विदिताः रुष्टाः किमेकैकशो
निष्क्रान्ता इव तेऽगलन् तदधुना रामेति मूढे ! वद ॥
(द्विजाः = दन्ताः)

# सुभाषितानि

लें० श्री यन्. गमनाथार्यः

पिबन्ति नद्यः स्वयमेव नांभः स्वयं न खादन्ति फलानि वृक्षाः ।
नादन्ति सस्यं खलु वारिवाहाः परोपकाराय सतां विभूतयः ॥ ३५१ ॥

The riches of great men are intended to help others. The rivers do not drink away their waters, trees do not eat away their fruits and the clouds do not devour the crops.

रत्नाकरः किं कुरुते स्वरत्नैः, विन्ध्याचलः किं करिभिः करोति ।
श्रीखण्डखण्डैः मलयाचलः किं परोपकाराय सतां विभूतयः ॥ ३५२ ॥

The riches of great men are intended to help others What does the sea (repository of gems) do with it gems? What does the mountain Vindhyas do with its elephants? And what does the Malaya mountains do with its Sandalwood trees?

श्रूयतां धर्मसर्वस्वं यदुक्तं ग्रन्थकोटिभिः ।
परोपकारः पुण्याय पापाय परपीडनम् ॥ ॥ ३५३ ॥

Hearken to the essence of righteous conduct

enunciated in innumerable scriptures. One acquires merit by helping others and sin by harming them·

श्रीष्मकाले दिनं दीर्घं शीतकाले तु शर्वरी।
परोपतापिन स्सर्वे प्रायशो दीर्घजीविनः॥ ॥ ३५४ ॥

Days are long during Summer and nights are long during winter. Generally, those who inflict pain on others, are long lived.

परोपदेशसमये जना स्सर्वेपि पण्डिताः।
तदनुष्ठानसमये मुनयोपि न पण्डिताः॥ ॥ ३५५ ॥

Everyone is an adept in advising others but even great men fail in acting according to their precepts.

स्वयं महेशः श्वशुरो नगेशः सखा धनेशः तनयो गणेशः।
तथापि भिक्षाटन मेव शम्भोः बलीयसी केवलमीश्वरेच्छा॥ ३५६ ॥

Great indeed are the decrees of Fate! Though by himself he is very great, his father-in-law the lord of Mountains, his favourite the Lord of wealth (Kubera), and his son the Lord of Hosts, Lord Sambhu (Lord Siva) is destined to lead the life of a beggar·

(सशेषम्)

# कविराक्षसीय स्सुभाषितनीवी च

रचयिता – पैसंवाडि॰ महाकवि रामानुजार्यः

श्रियःपति स्सर्वेश्वरः "परित्राणाय साधूनां...... युगे युगे" इति श्रीगीताचार्यरूपस्वोक्ति श्रीनिवासघण्टावतारूप श्रीमन्निगमान्तमहादेशिक-रूपेणावतीर्य सार्थयामास। तादृशघण्टावतारस्य नादरूप - श्रीसूक्तयोऽपि काश्चित साधुरक्षणार्थं, काश्चित्प्रतिवादिनिरसनार्थं, काश्चित् धर्मसंरक्षणार्थं च अवतेरुः। तथाविधग्रन्थेषु श्रीकृष्णमिश्रप्रचितप्रबोधचन्द्रोदयस्य प्रति-द्वन्द्वितया श्रीसंकल्पसूर्योदयः, डिण्डिमकविसाल्वाभ्युदयस्य यादवाभ्युदयः, मेघसंदेशस्य हंससंदेशः, पदकमलसहस्रस्य पादुकासहस्रं, अन्ये च केचन प्रतिवादिनिरसनार्थं, स्वमतस्थापनार्थं अवातन् इति गुरुपरम्परा-मुखग्रन्थेभ्यो ज्ञायते। केभ्यश्चन दिनेभ्यः पूर्वं रेवणाराध्यसूनु-नागनार्यकृत-व्याख्यायुतः पञ्चाधिकशतश्लोकमितः कविराक्षसीयाख्यः कश्चित् सुभाषितग्रन्थः मया अवालोकि। तदा श्रीमन्निगमान्तमहादेशिक-कृतः सुभाषितनीवीग्रन्थः दासमनसि प्रतिफलितः। ग्रन्थद्वयमपि विमृशति मयि "श्रीमद्देशिकैः राक्षसीयसुभाषितं श्रुत्वा नीवी रचिता" इति उदितम्, यतो हि नाम नीवीश्लोकपदार्था एव बहुलं राक्षसीये दृश्यन्ते। नीव्यां द्वादशद्वादशश्लोकमितद्वादशपद्धतयो विभक्ताः। राक्षसीये अविभक्ताः संकीर्णा स्सन्ति। एतदुल्लेखः न पूर्वैः कैश्चिदपि कृतः। एष राक्षसकविः कदा आसीदिति कालनिर्णयो न ज्ञायते। अथापि पूर्वकाले बहवो राजमन्त्र्यादयोऽपि कवयोऽभूवन्। रत्नावली-नागा-नन्दादिकर्ता श्रीहर्षः, चाम्पूरादिककर्ता भोजः, मृच्छकटिकर्ता शूद्रकः इत्यादय स्तथाविधाः। श्रीमद्भागवते इन्दुदेशचरिते च नन्दवंशराजानः

पूर्वमेतद्भारतभूमिं प्रशेसुरित्युच्यते । तदा तेषां नन्दानां राक्षस इति कश्चिद् ब्राह्मणोत्तमो मन्त्री बभूव । तदा वात्स्यायनः, चाणक्यः, कौटिल्यः, विष्णुगुप्त इति नामभिर्भूषितः नीत्यर्थकामशास्त्रादिवक्ता ब्राह्मणोत्तमः कश्चिदासीत् । स कदाचित् नन्दराज्यमागत्य स्वापराधिनो नव नन्दान् तत्पितरं सर्वार्थसिद्धिं च, तत्सर्वार्थसिद्धेः मुराख्यशूद्रस्त्रीपुत्रस्य अन्तिमसुतेन चन्द्रगुप्तेन समुन्मूलयत् । अपि च स तं चन्द्रगुप्तं स्वनीतिबलेन नन्दराज्यपालकं कृत्वा पूर्वमन्त्रिणं तमेव राक्षसं कृच्छ्रात् चन्द्रगुप्तस्य मन्त्रिणं चकारेति च उच्यते । स एव राक्षसमन्त्री एतत्सुभाषितग्रन्थकृदिति च ज्ञायते । अन्य एवैतद्राक्षसीयग्रन्थकर्तेति निरूपितं चेदाद्रियते सादरम् । इतः परं पूर्वोक्तग्रन्थद्वयोल्लेखनिरूपणस्थलीं अवतीर्य कांश्चन श्लोकान् प्रदर्शयामः ।

पश्यन्तु तावत्सुधियः ।

राक्षसीयश्लोकः २

शब्दशक्त्यैव कुर्वाणा सर्वदा नवनिर्वृतिम् ।
काव्यविद्या श्रुतिगता स्यान्मृतस्यापि जीवनी ॥

नीतीसत्कविश्लोकः २

सदा नवोक्तिमहितः प्रतिरुन्धन्प्रतीपगान् ।
प्रथितः काव्यनाम्नाऽपि कविरेकः प्रकाशते ॥

एतच्छ्लोकद्वयेऽपि पदसारूप्येण अर्थेऽपि शुक्रपक्षो दृश्यते ।

राक्षसीयश्लोकः ३

कल्याणवर्णपदतां वाग्विद्युदिव बिभ्रती ।
अभ्रान्तेषु सदा सारसंगेषु स्यात्स्फुरद्गुणा ॥

नीवीसत्कविश्लोकः ३

विशुद्धवर्णललिता गुणालंकारशालिनी ।
सरसा भारती यस्य सखन्वेकः प्रतिष्ठितः ॥

राक्षसीयश्लोकः ८७

जनित्वाऽपि महावंशे वक्राः केचन कण्टकाः ।
कुर्युर्जनपदक्लेशं साधुमार्गस्य दूषकाः ॥

नीवी-श्लोकः ४

जनित्वाऽपि महागोत्रे निम्नगा वक्रचेष्टिताः ।
वैपरीत्यं वितन्वन्ति समेषु विषमेषु च ॥

एवंरीत्या बहवः श्लोका वर्तन्ते । अतः पदार्थसारूप्यश्लेषान्वितं ग्रन्थद्वयमपि समवलोकनीयं महद्भिर्विद्वद्भिरिति प्रार्थये ॥



# मदीयसोदरीषु विज्ञापनम्

(श्रीमती लीलावती मुन्षी)

---

प्रियभगिन्यः,

बहोः कालान्मन एषः अभिलाषो वर्धते यत् अस्मज्जीविविधानं अस्तव्यस्तं कुर्वतां अद्यतनसमाजसम्बन्धिनां कतीनांचित् मुख्यांशानां विषये मदाशयश्च युष्मासु निवेदनीय इति। अस्य राजकीयांशैः सह न लेशतोपि संबन्धः। भवन्तु भवत्यः सिंडिकेटाः, इंडिकेटाः, पी. यस्. पीयाः, एस्. एस्. पीयाः, अतिवाद-साम्यवादिन्य, मितवादसाम्यवादिन्य, बि. के. डीयाः, अथवा जनसंघीया वा। अधुनातनसमाजगत्या अनया सर्वेषामस्माकं हानिर्भवति। अस्माकं मध्ये एकैका भगिनी, गृहिणी अथवा माता अथवा भगिनी भूत्वैव स्वजीवितं यापयिष्यतीति हेतोः अस्मदीयस्य गृहजीवनस्य भञ्जकानां अंशानां निराकरणं अस्माकं प्रथम-कर्तव्यमित्येव ममाशयं सर्वेऽपि यूयं संवदेयुरिति विभावयन्ती इदं निवेदयामि।

अद्य कतिपयानां दुर्भावानां प्रभावेण गृहजीवितं महिलानां कलुषीक्रियते। एष च शोभनगृहजीवनव्यवस्थानाशश्च अभिवृद्धिसाधनप्रचारव्याजेन संपाद्यते।

प्रथमं केबरेट् (Cabaret) प्रदर्शनान्यधिकृत्य किंचिद्ब्रवीमि। अत्र नग्नाः युवतयः अश्लीलचेष्टाबहुलाः तत्रायातैः युवभिस्सह निस्संकोचं स्वेच्छाचारिण्यः आरच्यन्ते। अनिरोधं अविवेचनं च आसवादिकं आसेव्यते। युवतयोपि मद्यपाने पुरुषैस्समं प्रसक्ता रक्ताश्च भवन्ति।

इतःपरं केचरेटेषु पुरुषानपि योजयिष्यन्तीति श्रूयते। अहं विभावयामि यत् अपर्याप्तवस्त्रधारिणः परकीया यून स्वस्वजायाना मुत्संगे उपविश्य स्वेच्छाचारविहाराः क्रीडेयुर्यदि तत्तत्पतीनां तदानन्दकरं भवेद्वेति।

अद्य काश्चन पसिद्धतमा वार्तापत्रिकाः प्राधान्येन प्रकाशयन्ति नग्नप्रायाणां युवतीनां नानाविधभङ्गीः, पदर्शयन्ति च तादृशरीतीनां प्रशंसनम्।

अत्र काचन शुभा वार्ता अश्रूयत यत् केन्द्रसर्वकारः महाराष्ट्रसर्वकारश्च जागरूकौ तादृशप्रदर्शननिवारणाय, तादृश-प्रकटन-निरोधाय च कतिचन कार्याणि कुरुत इति। आपञ्चविंशतिवर्षदेशीयानां युवकानां कृते एतादृशान्येव पदर्शनानि प्रकल्प्यन्ते। एतेषां नाम जांपेपन्सः। अत्र बाला बालिकाश्च नाट्यं, पानं, एतादृशानि अवाच्यकार्याणि च आरभन्ते।

अस्मासु उन्नतपुरोगामिवर्गत्वेन व्यवह्रियमाणेषु प्रायश स्वर्वेऽपि एतद्विषये अतिलोलुपा वर्तन्ते। विदेशीनामाचरणं सर्वमपि पुरोगमनद्वारत्वेन अवश्याचरणीयमिति विभाव्य तदनुकुर्वन्ति। पाठशालासु कलाशालासु च विद्यामभ्यसन्त्यः बालिकाः कतिचन निश्चितसमयेषु बालैः स्सगन्तु आरभन्त। तासु च कतिपयाः केवलं अशुकसंपादनार्थं, अन्ततः केवलं ओष्ठरञ्जन्यार्थं, सर्वदा सर्वत्र यं कमपि संगन्तु सन्नह्यन्ति। कश्चन विवाहात्पूर्वं पुरुषसंगमसौख्य मवश्यं आस्वाद्यमिति बालिका विश्वासयन्ति। चलनचित्रदर्शनद्वारा स्त्रीपुरुषसम्बन्धिनो दुरभिप्रायान् आर्जयन्ति ताः। स्वपितृभि अनुभूयमानस्य सुखस्य स्वैरप्यनुभवे न कश्चन दोष इति तासाममिप्राय स्समुदेति तासाम्।

गृहजीवने शान्तेः भङ्गकरमन्यत् दौर्जन्य मद्य समुपस्थितं वर्तते। एतच्च समाजस्य सकलांगेषु तत्रापि प्रधानतया विद्यावतां समवाये अतीव व्याप्नोति।

एवं असंपूर्णमनोविकासान् निरुद्योगिनो विद्वद्भूशान् सहस्रशः लक्षशश्च प्रतिवर्षं अस्मद्विद्याप्रणाली समुत्पादयतीति शोचनीयम् । एषु बहुला विद्यास्नाताः अपि श्रममनुभूय कर्म कर्तुं नेच्छन्ति । अतस्ते आनन्दकरानुद्योगान् केवलं वांछन्ति । तदलाभे च स्फोटनिर्माणविधाने, वातायनत्रोटने, गृहदाहे, प्रजासंपत्तेर्नाशे, उपाध्यायानां ताडने, रहस्यसंघानां प्रवर्तने च नैपुण्यं सम्पादयन्ति । तत्रापि केचन असत्यवादे हत्याकरणे च न किंचिदपि लज्जन्ते । युवान स्सर्वेपि प्रायशः दुष्कार्याणि मिथुनक्रियाविशेषांश्च चलनचित्रदर्शनद्वारैव अभ्यस्यन्ति ।

कलाशालानां पाठशालां च परिसरे यत्र कुत्रापि चलचित्रप्रदर्शनशालानां निर्माणमनुमनुते सर्वकारः । तादृशशालाश्च प्रायशः छात्रा एव पोषयन्ति । अधुना समष्टिकुटुम्बानां अभावप्रायत्वात् पितरौ इच्छया अनिच्छया वा स्वसन्ततिमपि आत्मभ्यां सहैव नयेतां चलचित्रदर्शनाय, तच्च चित्रम् बालानां प्रेक्ष्यमप्रेक्ष्यं वाऽस्तु । स्वयं बहिर्गमनवेलायां स्वसन्ततिं गृहे स्थापयितु मवकाशश्शून्यप्राय एव भवतीदानीं यतः स्वगृहे आत्मेतरे न केपि सन्ति । अधुना न केषामपि पितामहस्य पितामह्या वा इतरेषा मात्मबन्धूनां वा आवश्यकता वर्तते । एवं आसन्नभाविनि देशपरिपालकानां बालकानां मनांसि मैथुनवांछाविशेषाणां दुस्संकल्पानां च निलया भूत्वा भ्रश्यन्ति । बालानां एतादृशेन नवार्जितेन दुर्वर्तनेन बहवो गृहिणः क्लिश्यन्ति भृशम् ।

मूल्यवृद्ध्या समापतिताभिः आर्थिकाकांक्षाभिः मातरोपि नियतं कर्मकरण-द्वारा अर्थं यं कञ्चनार्जयितुं गच्छेयुः । एतेन गृहनिवर्तनानन्तरमेव वा बालानां योगक्षेमविज्ञाने तत्सम्पादने वा तासां अवकाशोऽल्पोपि न लभते । उद्योगिनी युवतिः अन्यत्र श्रांता गृहं प्रतिनिवृत्ता च भर्तुः आवश्यकविधीनपि निर्वर्तयितु-मशक्ता तं मन्दहासेनापि न नन्दयितुं पायति वराकी ।

निर्वाचनक्षेत्रे सम्मतिदातृषु प्रायशः अर्धं स्त्रियो भवन्तीति निस्संशयम् । ताश्च यस्य कस्यापि पक्षस्याभिमानिन्योपि सर्वास्संभूय दुष्टशक्तीनां निरोधने गृहजीवनकालुष्यविधायिनां उपरि निर्दिष्टविषयाणां प्रभावात् गृहाणां संरक्षणकल्पने च दीक्षितेभ्य एव स्वसम्मतीनां दद्युश्चे दस्माकं गृहाणि सुसम्पन्नानि भवेयुरेति ममाभिप्रायः । देशे च कोणे कोणे दौर्जन्यं विजृम्भते । अस्यां वेलायां यदि युवसु च एतादृशी एव रीतिरभिवर्धेत तर्हि अस्मद्रक्षणाय भगवानपि नालम् ।

एतं ममाक्रोशं पठितवती न केवलं युवतिः युवापि स्वभाषायां अनूद्य बहुलासु वार्तापत्रिकासु सामयिकपत्रेषु च इम प्रकाशयेदिति आकांक्षे । अद्य यथा इतःपरमपि यूनां सांघिकाचारमूल्यस्य अपरिज्ञाने, तत्र अनादरे च प्रवृद्धे भारतीया जातिरेव निर्वीर्या निस्तेजस्का विच्छिन्ना च भवेत । पुनःयथापूर्वस्थितिसम्पादनाय च शतशस्संवत्सराणां व्यवधिरपेक्ष्येतेति विज्ञेयमस्माभिः ।

जातिविच्छेदनिरोधाय एकमनस्का भवन्त्विति सर्वा महिलामण्डलीरर्थये ।

(भवन्सूजर्नल् सौजन्येन)



# पदार्थविज्ञानसारः

[पूर्वानुबन्धः]

## अथ चतुर्थोपकथनम्

### जलमय-मृण्मय-भूमण्डलविषयकम्

शिष्यः - पृथ्वीयं कस्माद्धेतोः सृष्टाऽभूत् ?

गुरुः - प्राणिनिवहानां निवासार्थं निर्मिताऽभूत्। अतः पृथिव्या अभ्यन्तरे उपरि च कोटिकोटिप्राणिनो निवसन्ति। तन्निवासेन ते सुखिनो भवन्ति।

शिष्यः - पृथ्वी कस्मिन् संस्थापितास्ति ?

गुरुः - न हि कस्यचिदुपरि पृथ्वी स्थापितास्ति। तथाचेत् केन प्रकारेण पृथिव्या गमनं संभवति। अतोत्र प्राचीनै र्यदुक्तं तदवधीयताम्। शून्यप्रदेशे पृथिवीयं परमेश्वरेण स्थापितेति।

शिष्यः - यस्यां वयं निवसामः सेयं पृथ्वी किं सदा शून्यप्रदेशे स्थित्वा भ्रमति ?

गुरुः - तत् सत्यम्। इयं पृथिवी गृहादयश्च शून्यप्रदेशे स्थित्वा भ्रमन्ति।

शिष्यः - यया शक्त्या कृत्स्नमिदम् सृष्टमभूत्, एवं प्रथमावधि चालितं सदेतत्कालपर्यन्तं स्वस्ववर्त्मनि संरक्षितमस्ति, सा शक्तिः कीदृगाश्चर्यकर्यास्ति !

गुरुः - परमेश्वरोयं स्वशक्त्या पृथ्वीमिमां सृष्टवान्। एवं निजबुद्धिकौशल्येन जगदिदं जगदीश्वरः स्थापितवान्। एव माकाशमपि विस्तारयामास।

शिष्यः - अस्याः पृथिव्याः कति भागाः सन्ति ?

गुरुः - एतस्याः द्वौ भागौ। एकस्तु जलमयः, द्वितीयो मृण्मय इति।

शिष्यः - यदीयं कृत्स्ना पृथ्वी पर्वतोपपर्वतादिभिर्विहीना एती समानाकारेण विस्तृतासीत्, तदा किमधिकसौन्दर्यं तस्यासीत्? किमेतैः पर्वतादिभि स्तस्याः सौन्दर्यन्यूनता न स्यात्?

गुरुः - मैवम्। एभिः क्षुद्रभूतैः पर्वतादिभिः पृथिव्याः सौन्दर्यहानिः भवतीति किमेषा बुद्धिस्ते भवति। पश्य, यथा कृत्रिमभूगोलोपरि धूलिकणिका, नारंगफलावयवे च निम्नोन्नता च त्वक् तथा पृथिव्यां पर्वतादयः सन्ति। यदि पर्वतादयो नाभवन् तदा नदीनदनिर्झरादयोपि नाभवन्, यतः बाष्पवृष्टिप्रभृतयः पर्वताभ्यन्तरे प्रविशन्ति। तेनैव च नदीनदादयो जायन्ते। एवं पर्वतेभ्यो धातुमणिश्वेतप्रस्तरादयोपि जायन्ते। परन्तु एतादृशी शक्तिः पर्वतस्यास्ति, यया मेघानाकर्षति। एवं निजसमीपस्थां निम्नभूमिं हिमवातादवति च।

शिष्यः - वालुकामयपर्वतास्सन्ति, येभ्यः किमपि कार्यं न जायते। तैः किं फलं भवति ?

गुरुः - तेषु फलं विद्यत एव, यतस्तैः सामुद्रीयतरङ्गा निम्नभूमिं गन्तुं न शक्नुवन्ति। एतदस्माकं विवेचनायोग्यं भवति। यद्यपि वालुका ईदृशी क्षुद्रा, यदस्माभिः फूत्कारेण चालयितुं शक्यते,

तथापि ताः संभूयेष्टकू कठिनाःर्वतो भवति । यत्र सामुद्रे तरङ्ग वेगेन समाघातेपि न तद्भग्निर्भवति । एवम् समुत्थितोपि समुद्रस्तं लङ्घयितुम् न शक्नोति ।

शिष्यः - पृथिव्या अभ्यन्तरभागबाह्यभागौ समानौ न वा ?

गुरुः - वस्तुतो नैकरूपत्वम्, तयोः यतः पृथिव्या अभ्यन्तरे स्वर्ण-रजतताम्रसीसकलौहप्रभृतयो नानाधातवो वर्तन्ते ।

शिष्यः - मृत्तिकाभ्यन्तरे कथमेते धातव स्तिष्ठन्ति ?

गुरुः - कृषिकर्मणां कापि बाधा यथा न जायते, तस्मादेव मृत्तिकामध्ये ते तिष्ठन्ति ।

शिष्यः - धातुभ्योन्यत् किमपि मूल्यवद्वस्तु पृथिव्यां विद्यते ?

गुरुः - आम् । अनेकम् वस्तु विद्यते । पश्य, पारदकटिनीगन्धक-चूर्णलवणेष्टकाकाचमृत्तिकाप्रभृति वस्तु । एवम् प्रस्तर-श्वेत-प्रस्तरस्फाटिकहीरकचुम्बकपाषाणादिकम् तस्माज्जायते, येन चुम्बकप्रस्तरेण समुद्रगमने महानुपकारः स्यात् ।

शिष्यः - पृथिवीविषयकमेतत् सर्वं श्रुतवान् । यदि भवान् मामनुगृह्णाति तदा सामुद्रीयम् विवेचनीयम् यद्भवति तत् किञ्चित् ज्ञातु-मिच्छामि ।

गुरुः - समुद्रस्य विवेच्यगुणास्तु विस्तारवत्ता, गाम्भीर्यम्, लवणाक्तता, वृद्धिह्रासौ, वेला च ।

शिष्यः - ईदृशी विस्तारवत्ता तस्य कथमभूत् ?

गुरुः - अस्मिन्नुचितम् कारणमास्ते । तत्र सन्देहो नास्ति, यतः सर्वजलाधारभूतस्य समुद्रस्य प्रचण्डचण्डकरकरतापतो लक्षलक्ष-

कुम्भमिता मेघा उत्पद्यन्ते। तेषां मेघानां वर्षणतो निखिल-देशीयलोकानां स्नानपानादि कर्म निर्व्यूढम् भवति।

शिष्यः - शरीरिणां शरीरेषु यथा प्रकृतिविकृतिभावो जायते तथा सर्वेषु वस्तुषु तादृग्विद्यते न वा ?

गुरुः - आमेवम्। पश्य, वृष्टितो जलोद्गारी गर्तो जायते, ततो नदी, नदीतः समुद्रोपचयः। समुद्रात् बाष्पम्, बाष्पात् मेघो जायते। मेघात् वृष्टिर्भवति। अनेनैव प्रकारेण प्रकृतिविकृतिभावः प्रथमावधि आप्रलयम् वेदितव्यम्।

शिष्यः - अपरापरवस्तुतो यः प्रस्तरो जायते तद्बीजम् किम् ?

गुरुः - गभीरनीरान्तरे प्रस्तरताम्रादि विद्यते। तस्मिन्नुदके यदन्यत् किमपि वस्तु बहुकालम् तिष्ठति तत्तत् पाषाणताम्रादि-गुणसम्बन्धात् तद्रूपेण परिणमति।

शिष्यः - हे गुरो! महाशय! मां प्रत्यनुग्रहम् विधाय त्वया विस्तरेण वक्तव्यम् नदी केन रूपेणाविर्भवतीति।

गुरुः - पर्वताभ्यन्तरे स्थलविशेषे स्फाटितम् वर्तते, तस्मिन्नुदधिनदी-संबन्धिबाष्पीयजलम् प्रविश्य जलोद्गारी गर्तो जायते। प्रथमम् बाष्पीयजलम् गिरौ निपत्य स्फाटितरन्ध्रेणाभ्यन्तरे प्रविश्य यावत् कठोरं पाषाणमयम् वा स्थलम् न लभते तावदभ्यन्तरे तत् प्रविशति। किन्तु तद्रूपम् स्थलम् प्राप्य तत्र क्रमेण वृद्धिं लब्ध्वा यदेकतो भित्वा बहिर्निर्गच्छति। तेन च कतिचित् स्रोतांसि मिलित्वा नदीं प्रावर्तयन्ति।

(सशेषम्)

संस्कृतभाषाप्रचारिण्या सभया नवप्रकाशितम्

चतुर्विंशं कुसुमम्

# धातुचन्द्रिका

श्रीमता आ. वरदराजेन, उपयुक्तानां बहूनां धातूनां रूपाण्यत्र निरूपितानि। सुलभग्रहणार्थं सार्वधातुकरूपाणि प्रथमतः आर्धधातुकरूपाणि च तदनन्तरं निवेशितानि। कण्ठस्थीकरणक्लेशो यथा न भवेत् साम्यदर्शनविधया यथा रूपं ज्ञायेत तथा वर्गशः निवेशिता धातवः। अन्ते णिजन्त-सन्नन्त-यङन्त-यङ्लुगन्त-नामधातुप्रकरणै स्साकं धातूनामकारादिसूची च संयोजिता।

मूल्यम् रु. 2-50

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.
*R. N. 8145/60.* *Postal R. No. H. 493*

# गैर्वाणी

भारतसर्वकारेण पुरस्कृता च

## प्रहेलिके

उच्छिष्टं शिवनिर्माल्यं वमनं शवकर्पटम् ।
काकाविष्टासमुत्पन्नः पंचैतेऽतिपवित्रकाः ॥

अर्थः – उच्छिष्टं = वत्सोच्छिष्टम् गोदुग्धम्, शिवनिर्माल्यं = गङ्गा, वमनं = मक्षिकावमनभूतं मधु, शवकर्पटं = कीटघातपूर्वकं संपादितं पट्टवस्त्रं, काकविष्टासमुत्पन्नः = अश्वत्थवृक्षः, इति एते पञ्च अतिपवित्रत्वेन आद्रियन्ते ।

अनेकसुषिरं वाद्यं कान्तं च ऋषिसंज्ञितम् ।
चक्रिणा च सदाऽऽराध्यं यो जानाति स पण्डितः ॥

अर्थः – अनेक सुषिरं = अनेकबिलसहितं, वाद्यं = वकाराद्यक्षरशालि, कान्तं = ककारान्ताक्षरयुतं, ऋषिसंज्ञितं = प्राचेतसस्य ऋषेः निरूपकं, सदा, चक्रिणा = सर्पेण, आराध्यं = आसेव्यं वल्मीकं भवति ।

Published by Sri N. Ramanatha Iyer B. A; B. L. Advocate
& Secretary S. B. P. Sabha, Chittoor. (A. P.)
Printed by Sri T. K. Thiruvengadacharya
at Vijaya Press, Chittoor (A. P.) C 1500